गायन्ति त्वा गायत्रिणो(२)ऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रतवुद्वंशमिव येमिरे ॥

गायन्ति । त्वा । गायत्रिणः ( २ ) । अर्चन्ति । अर्कम् । अर्किणः ।
ब्रह्माणः । त्वा । शतक्रतविति शत-क्रतो । उदिति । वंशम् । इव । येमिरे ॥

५ ( पा ७.३.५२ ) इति कुत्वम् । अर्केभिः अर्कैः ऋग्भिः इन्द्रम् एव अनूषत अस्तुवन् । छान्दस ऐसभावः ( पा ७.१.१० ) । तथा वाणीः वाण्यः ऋग्यजुःसामलक्षणाः,। "वा छन्दसि" ( पा ६.१.१०६ ) इति पूर्वसवर्णदीर्घत्वम् । पारिशेष्यादध्वर्यूणां वाण्यश्च इन्द्रमेव अनूषत नुवन्ति । णू स्तवने, तौदादिकः । छान्दसो लुङ् ( पा ३.२.६ ) । व्यत्ययेनात्मनेपदम् ( पा ३.१.८५ ) । कुटादित्वाद्गुणाभावः ( पा १.२.१, पा १.१.५ )। छान्दस इडभावः ।
१० तथा स इन्द्रोऽस्मभ्यमन्नं ददात्विति ॥

तत्रैव याज्या—' गायन्ति ' इत्यनुष्टुप् ॥ हे शतक्रतो बहुकर्मन् शताश्वमेधिन् वा इन्द्र, गायत्रिणः गायत्रेण साम्ना तद्वन्त उद्गातारः त्वा गायन्ति । तथा अर्किणः अर्कवन्तः ऋक्षु साधवः होतारः त्वाम् अर्कं स्तोतव्यम् अर्चन्ति[8] स्तुवन्ति । यद्वा— अर्च पूजायाम् । अर्चयन्त्यर्कं पूजनीयं त्वामर्चयन्ति पूजयन्ति होतारः । तथा ब्रह्माणः ब्रह्मादयः अध्वर्यवोऽपि
१५ गृह्णन्ते[9] । ते त्वाम् उद् येमिरे उद्यच्छन्ते उत्थापयन्ति वर्धयन्तीत्यर्थः । छान्दसो लिट् । कमिव ? वंशम् इव । यथोत्तमसंबन्धादिभिः सत्पुरुषा वंशं स्वकुलमुत्कर्षं नयन्ति । यद्वा— वंशमामं यथोदकादिभिः[10] शनैः वर्धयन्ति तद्वत् स त्वमस्मभ्यमन्नं प्रयच्छेति । केचित्— अत्रोभयत्रार्कशब्दोऽन्नवचनः । अर्किणः अन्नवन्तः अर्कैर्हविर्लक्षणैरर्कमर्घ्यं पूज्यं त्वामर्चयन्ति यजन्ते । शेषं समानमिति ॥

२० इत्यस्माम्नातोऽस्यसोऽर्कशब्द [27]ऋचमाचष्टे । अर्केभिः ऋग्भिः अर्किणः बह्वृचाः इन्द्रम् अस्तुवन् । [28]वाणीः अन्या अपि वाचो यजूरूपाः इन्द्रम् अस्तुवन्[28] ॥

गायन्तीति ॥ याज्यामाह—' गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः । ब्रह्माणस्त्वा शतक्रतवुद्वंशमिव येमिरे ' इति ॥ हे शतक्रतो, गायत्रिणः गायत्रसामयुक्ता उद्गातारस्त्वां गायन्ति । अर्किणः बह्वृचास्त्वाम् अर्चन्ति स्तुवन्ति । ब्रह्माणः तदुपलक्षिता अध्वर्यवोऽपि त्वाम् उद् येमिरे उत्थापयन्ति
२५ वर्धयन्तीत्यर्थः । किमिव ? वंशम् इव । यथा कुल्याधारादिभिः स्वकीयं [29]वंशमुन्नतं कुर्वन्ति तद्वत् ॥

इष्ट्यन्तरं त्रिहविष्कं विधत्ते—" इन्द्राय घर्मवते पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायेन्द्रियावत इन्द्रायार्कवते भूमिकामो यदिन्द्राय घर्मवते निर्वपति शिर एवास्य तेन करोति यदिन्द्रायेन्द्रियावत आत्मानमेवास्य तेन करोति यदिन्द्रायार्कवते भूत एवाध्ये प्रति तिष्ठति भवत्येव " ( तैसं २.२.७ )

८. मै–अर्चयन्ति । ९. उं.ति–गायन्ति । १०. तं.ति.पं–सेवादिभिः ।

३० २७. क–ऋतरयमाचष्टे । २८. तं–' वाणीः...अस्तुवन् ' नास्ति । २९. क–वंशमुन्नयति उन्नतम् ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

अं॒ह॒मुचे॒ प्र भ॑रेमा मनी॒षामो॑षिष्ठ॒दाव्ने॑ सुम॒तिं गृ॑णा॒नाः ।

इ॒दमि॑न्द्र॒ प्रति॑ ह॒व्यं गृ॑भाय स॒त्याः स॑न्तु॒ यज॑मानस्य॒ कामाः॑ ॥

अं॒हो॒मुच॒ इत्यं॑हः–मुचे॑ । प्रेति॑ । भ॒रे॒म॒ । म॒नी॒षाम् ।

ओषि॑ष्ठदाव्न॒ इत्योषि॑ष्ठ–दाव्ने॑ । सु॒म॒तिमिति॑ सु–म॒तिम् । गृ॒णा॒नाः ।

इ॒दम् । इ॒न्द्र॒ । प्रतीति॑ । ह॒व्यम् । गृ॒भा॒य॒ । स॒त्याः । स॒न्तु॒ । यज॑मानस्य । कामाः॑ ॥ ५

"इन्द्रायांहोमुचे पुरोडाशमेकादशकपालं निर्वपेद्यः पाप्मना गृहीतः स्यात्" (तैसं२.२.७) इत्यस्य पुरोनुवाक्या–'अंहोमुचे' इति त्रिष्टुप् ॥ अंहसः पापाद्विमोक्त्रे ^ओषिष्ठदाव्ने दावेनौषिष्ठः दग्धृतमः आदित्यः तस्मै उदकस्य दात्रे, वर्षार्थं वा तस्य दापयित्रे; यथा–"आदित्याज्जायते वृष्टिः" (मनुस्मृति ३.७६) इति । उष दाहे । तृजन्तात् (पा ३.१.१३३) "तुश्छन्दसि" (पा ५.३.५९) इतीष्ठन्प्रत्ययः । "तुरिष्ठेमेयःसु" (पा ६.४.१५४) इति तृशब्दस्य लोपः । ददातेः "आतो मनिन्" (पा ३.२.७४) इति वनिप्प्रत्ययः । हे ^इन्द्र, ईदृशाय तुभ्यं ^गृणानाः स्तुवन्तः वयं ^मनीषां बुद्धिं ^प्र ^भरेम त्वत्स्तुत्यर्थं प्रकर्षेण स्वीकुर्मः । कीदृशीं ? ^सुमतिं शोभमानाम् । "नञ्सुभ्याम्" (पा ६.२.१७२) इत्युत्तरपदान्तोदात्तत्वम् । त्वां तोषयेमेत्येवंरूपाम् । त्वं च तया स्तुत्या तुष्टः ^इदं ^हव्यं ^प्रति ^गृभाय प्रतिगृह्णीष्व । "हृग्रहोर्भश्छन्दसि" (पा ८.२.३२ वा १) इति भः । "छन्दसि शायजपि" (पा ३.१.८४) । ^यजमानस्य ^कामाः मनोरथा अंहसो मुच्येयेत्येवमादयः ^सत्याः अमोघा भवन्तु ॥ १५

इति । तेन घर्मवते निर्वापेणाध्वर्युरस्य यजमानस्य शिरः करोति । [30]–एवंविधैश्वर्यादिभिः–[30] सभायामुन्नतशिरस्कं करोति । तेनेन्द्रियावते निर्वापेणास्य यजमानस्याऽऽत्मानमेव करोति पुष्टशरीरमेव करोति । अर्कवते निर्वापेण यजमानो भूत एवैश्वर्यं प्राप्त एव [31]सन्नदनयोग्ये सभ्यगणे प्रतितिष्ठति । अत्रत्येव पुनरप्यधिकमैश्वर्यं प्राप्नोत्येव । अत्र घर्मवतो हविषि 'आ यस्मिन्' इत्यादिके याज्यानुवाक्ये । २० इन्द्रियावतो हविषि 'इन्द्रियाणि शतक्रतो' इत्यादिके । अर्कवतो हविषि 'इन्द्रमिद्गाथिनो बृहत्' इत्यादिके ॥

इष्ट्यन्तरं विधत्ते–"इन्द्रायांहोमुचे पुरोडाशमेकादशकपालं निर्वपेद्यः पाप्मना गृहीतः स्यात् पाप्मा वा अंह इन्द्रमेवांहोमुचं स्वेन भागधेयेनोप धावति स एवैनं पाप्मनोंऽहसो मुञ्चति" (तैसं २.२.७) इति ॥ [32]अंहःशब्देन अत्र नरकहेतुर्निषिद्धाचरणादिरूपः[33] पाप्मोच्यते ॥ पाप्मनः अंहसः २५ अत्यधिकात् पापादित्यर्थः ॥

अंहोमुच इति ॥ तत्र पुरोनुवाक्यामाह–'अंहोमुचे प्र भरेमा मनीषामोषिष्ठदाव्ने सुमतिं गृणानाः । इदमिन्द्र प्रति हव्यं गृभाय सत्याः सन्तु यजमानस्य कामाः' इति ॥ ^गृणानाः स्तुवन्तो वयम्

३०.–३० आ.हा–एवंविधैश्वर्यादिभिः । ३१. उ.पा.हा–सन्नदन एव योग्ये । ३२. क– 'अंहःशब्देन' इत्यस्यानन्तरम् 'आगः' । ३३. इ,उ–°चरणरूपः । ३०

[ काम्येष्टियाज्यापुरोनुवाक्याः

विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः ।
अꣳहसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते ॥

विवेष । यत् । मा । धिषणा । जजान । स्तवै । पुरा । पार्यात् । इन्द्रम् । अह्नः ।
अꣳहसः । यत्र । पीपरत् । यथा । नः । नावा । इव । यान्तम् । उभये । हवन्ते ॥

५ तत्रैव याज्या—'विवेष' इति त्रिष्टुप् ॥ यत् यस्मात् मां धिषणा तादृशी बुद्धिः विवेष व्याप्तवती तस्मादहं जजान जातवानस्मि; नो चेदहमजातसम[11] एव स्याम् । अपदात् परत्वान्न निहन्यते । "समानवाक्ये निघातादयः" (द्र. पाभा २·१·१ वा ११) इति वचनात् जजानेति न निहन्यते । का पुनः सा धिषणेत्याह—पार्यात् पारे भवात् अत्यन्तात् अह्नः दिवसात् पुरा पूर्वं यावन्मरणदिवसम् इन्द्रं स्तवै स्तुत्या तोषयामीतीयं धिषणा जजान ममोदपादि, अतो
१० जातवानस्मि । पुनश्च धिषणा विशेष्यते—यत्र यस्यां धिषणायां सत्याम् इन्द्रः अंहसः पापात् पीपरत् पारयति उत्तारयति पुरुषम् । पार तीर कर्मसमाप्तौ । छान्दसो लुङ् । "चङ्यन्यतरस्याम्" (पा ६·१·२१८) इत्युपोत्तमोदात्तत्वम्[34] । यद्वा—यत्राहि अस्मानिन्द्रः अंहसः पारयति उत्तारयति तत्पार्यमहरिति निर्वचनं क्रियते । आ तत इन्द्रं स्तवै, यावदंहोविमोचनमित्यर्थः । अथ पारतरणं विशेष्यते— यथा अंहसः उत्तारितानस्मान् उभये उभयकुलप्रभवा अपि
१५ हवन्ते आह्वयन्ति आत्मरक्षार्थं मां रक्ष मां रक्षेति । यथेति निपातो यद्वृत्तप्रतिरूपकः[35] । यथा गणकारः—"मात्रायां वेलायां यथा पुरा ह्रो अहो अथो मनो(न्ये)" (द्र. गणपाठ-पा १·४·५७) इति । तेनाख्यातं निहन्यते[36] । यथा नदीमध्ये नावा यान्तम् [12]उभयतटस्थिता आह्वयन्ति, भो मामुत्तारय मामुत्तारयेति, तथांहस उत्तारिणी धिषणा बुद्धिर्मां विवेष व्याप्ता भवतु, अतो जजानाहमिति । तस्मात् [13]तादृशधिषणं मामिन्द्रः अंहसो मुञ्चत्विति ॥

२० ओषिष्ठदाव्ने ग्रीष्मकाले दावाग्निनाऽत्यन्तदग्धभूप्रदेशेभ्यो वर्षतीं वृष्टिदात्रे अꣳहोमुचे पापात् मोचयित्रे मनीषां बुद्धिं प्र भरेम स्वीकुर्मः । कीदृशीम् ? सुमतिं, 'त्वां तोषयेम' इत्येवमादिशोभनमननोपेताम्[14] । हे इन्द्र, इदं त्यज्यमानं[15] हव्यं[16] प्रति गृहाण । तेन यजमानस्य कामाः सत्याः सन्तु ॥

विवेषेति ॥ याज्यामाह—'विवेष यन्मा धिषणा जजान स्तवै पुरा पार्यादिन्द्रमह्नः । अꣳहसो
२५ यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ते' इति ॥ यत् यस्मात् कारणात् धिषणा पूर्वोक्ता बुद्धिर्मां

११. तं.ति–°जातः । [34][शुद्धीकृतः पाठः । मैसूरमुद्रितपुस्तके लिखितपुस्तकेषु च 'इत्युत्तरपदान्तोदात्तत्वम्' इति पाठोऽस्ति ।] । [35][यथेति निपातस्य यद्वृत्तप्रतिरूपकत्वात् 'यावद्यथाभ्याम्' (पा ८·१·३६) इति निघातनिषेधः न प्रवर्तते । यथेत्यस्य यद्वृत्तप्रतिरूपकत्वेऽपि साक्षाद्यद्वृत्ताभावात् 'यद्वृत्तान्नित्यम्' (पा ८·१·६६) इत्यनेनापि निघातनिषेधस्य अप्रवर्तनात् 'तिङ्ङतिङः' (पा ८·१·२८)
३० इत्यनेन 'हवन्ते' इत्याख्यातं निहन्यते इत्याशयः भाष्यस्य प्रतिभाति ।] । १२. मै–उभयतः स्थिताः । १३. तं.ति–तादृग्धिषणम् ।

१४. क–मनसोपेताम् । १५. क.तं.ति.म४–दीयमानम् । १६. तं.ति–हव्यान्नम् ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

प्र स॒म्राजं॑ प्रथ॒मम॑ध्व॒राणा॒(३)मꣳहो॒मुचं॑ वृष॒भं य॒ज्ञिया॑नाम् ।
अ॒पां नपा॑तमश्विना॒ हय॑न्तम॒स्मिन्न॑र इन्द्रि॒यं ध॑त्त॒मोजः॑ ॥

प्रेति॑ । स॒म्राज॒मिति॑ सम्–राज॑म् । प्र॒थ॒मम् । अ॒ध्व॒राणा॑म् (३) ।
अ॒ꣳहो॒मुच॒मित्य॑ꣳहः–मुच॑म् । वृ॒ष॒भम् । य॒ज्ञिया॑नाम् ।

अ॒पाम् । नपा॑तम् । अ॒श्वि॒ना॒ । हय॑न्तम् । अ॒स्मिन् । न॒रः॒ । इ॒न्द्रि॒यम् । ध॒त्त॒म् । ओजः॑ ॥

तत्रैव याज्या विकल्प्यते—'प्र सम्राजम्' इति त्रिष्टुप् ॥ सम्राजं संगतदीप्तिम् । "मो राजि समः क्वौ" (पा ८·३·२५) । अध्वराणां यज्ञानां प्रथमं प्रधानम् । अꣳहोमुचम् अंहसो मोक्तारम् इन्द्रं, स्थानात् गम्यते । वृषभं वर्षितारं कामानां दातारम् । यज्ञियानां यज्ञार्हाणां मध्ये सम्राजं सम्यग्राजन्तं, यज्ञियानां वा संबन्धिनं स्वामित्वेन, यज्ञियानां वा वृषभम् । "यज्ञर्त्विग्भ्याम्" (पा ५·१·७१) इति घः । अपां नपातम् अपां चतुर्थमिन्द्रम् अस्मान्मध्यमः ततो मेघः तत आप इति । न पातयति न च्यावयतीति नपात्, "नभ्राण्नपात्" (पा ६·३·७५) इति निपात्यते । हयन्तं वर्धमानम् अविच्छिन्नैश्वर्यं सर्वगम् । हय गतौ । हे नरः मनुष्या ऋत्विजः, ईदृशमिन्द्रं प्र गच्छत प्रकर्षेण बन्धुत्वेन भजत, यथायं यजमानः अंहसो मुञ्चतीति । यद्वा—'प्र' इत्यस्याख्यातापेक्षायां धत्तमिति वक्ष्यमाणत्वाच्च धत्तेति सामर्थ्याद्योग्यं लभ्यते । इदानीमश्विनावुच्येते—हे अश्विनौ, युवामपि अस्मिन् यजमाने इन्द्रियं चक्षुरादिदार्ढ्यम् ओजः बलं च प्र धत्त प्रकर्षेण स्थापयतम् । अत्रापि [14]विशेषाकाङ्क्षायां प्रेति प्रकृतं संबध्यते, अंहसश्च मुक्तोऽस्त्विति ॥

विवेष व्यासवती तस्मादहं सुमुद्रिः अजान जाववानस्मि । अत एव पार्यान् अह्नः [17]–पारे भवात्–[17] मरणदिवसात् पुरा त्वा [18]–स्तवै भामरणं स्तवानीत्यर्थः–[18] । यत्र यस्यां धिषणायां सत्याम् इन्द्रोऽस्मान् अꣳहसः पापात् पीपरत् उत्तारितवान् सा धिषणा विवेषेत्यन्वयः । अथवा यत्राऽहनि अस्मानंहसः पारयति तस्मात् पार्यादह्नः पुरा स्तवा इत्यन्वयः । यथा लोके नावा नद्याः यान्तं नाविकम् उभये कूलद्वयवर्तिनो हवन्ते; भो, मामुत्तारयेत्याह्वयन्ति तथैवांहसो मुक्तानस्मानुभयक्व(कु)लमथवा आह्वयन्तीत्यर्थः ॥

प्रेति ॥ अत्रैव विकल्पितामन्यां याज्यामाह—'प्र सम्राजं प्रथममध्वराणामꣳहोमुचं वृषभं यज्ञियानाम् । अपां नपातमश्विना हयन्तमस्मिन्नर इन्द्रियं धत्तमोजः' इति ॥ हे नरः मनुष्या ऋत्विजः, प्रकर्षेणेन्द्रं भजतेति शेषः । कीदृशम्? सम्राजं सम्यग्दीप्यमानम् । अध्वराणाम् अग्निष्टोमादीनां प्रथमं मुख्यदेवतम् । अꣳहोमुचं पापात् मोचयितारम् । यज्ञियानां यज्ञसंबन्धिफलानां वृषभं वर्षितारम् । अपां वृष्टिरूपाणामुदकानां नपातम् अविनाशयितारम् । हयन्तम् ऐश्वर्यस्य गमयितारम् । हे अश्विनौ, अस्मिन् यजमाने इन्द्रियं चक्षुरादिपाटवम् ओजः बलं च धत्त स्थापयतम् ॥

इष्ट्यन्तरं विधत्ते—"इन्द्राय वैमृधाय पुरोडाशमेकादशकपालं निर्वपेद्यं मृधोऽभि [illegible] वेपेरन् राष्ट्राणि वाऽभि समियुरिन्द्रमेव वैमृधꣳ स्वेन भागधेयेनोप धावति स एवास्मान् मृधोऽपहन्ति" ।

१४. तं.प–विशेषणाकाङ्क्षायाम् ।

१७–१७. तं. ति–पुरोत्तमात् । १८–१८. इ.उ.पा–तथैवामरणं स्तवानीत्यर्थः;ह्रा–तथैवामरणं स्तावानर्थः (?) ।

वि न॑ इन्द्र॒ मृधो॑ जहि नी॒चा य॑च्छ पृतन्य॒तः ।
अ॒ध॒स्प॒दं तमीं॑ कृ॒धि यो॑ अ॒स्माँ२ अ॑भि॒दास॑ति ॥

वीति॑ । नः॒ । इ॒न्द्र॒ । मृधः॑ । ज॒हि॒ । नी॒चा । य॒च्छ॒ । पृ॒त॒न्य॒तः ।
अ॒ध॒स्प॒दमित्य॑धः–प॒दम् । तम् । ई॒म् । कृ॒धि॒ । यः । अ॒स्मान् । अ॒भि॒दास॒तीत्य॑भि–दास॑ति ॥

" इन्द्राय वैमृधाय पुरोडाशमेकादशकपालं निर्वपेद्यं मृधोऽभि प्रवेपेरन् राष्ट्राणि वाभि समियुरिन्द्रमेव वैमृधम् " ( तैसं·२·२·७ ) इत्यस्य पुरोनुवाक्या—" वि न इन्द्र ' इत्यनुष्टुप् ॥ हे इन्द्र, नः अस्माकं मृधः योद्धॄन् अस्माभिर्युध्यमानान् वि जहि विविधं मारय । किंच— पृतन्यतः संग्रामं कर्तुमिच्छतः पुरुषान् नीचा न्यग्भूतान् यच्छ उपरमय मारयेति यावत् । न्यक्शब्दाद्द्वितीयाबहुवचनस्य स्थाने व्यत्ययेन तृतीयैकवचनम् । " अञ्चेश्छन्दस्यसर्वनामस्थानम् " ( पा ६·१·१७० ) इति तस्या उदात्तत्वम् । पृतनायाः क्यचि " कव्यध्वरपृतनस्य " ( पा ७·४·३९ ) इति लोपः । " शतुरनुमः " ( पा ६·१·१७३ ) इति शस उदात्तत्वम् । किं च यः अस्मान् अभिदासति अभिदासयति उपक्षपयति । दसु उपक्षये । ण्यन्ताल्लेट् । " छन्दस्युभयथा " ( पा ३·४·११७ ) इति शप आर्धधातुकत्वाण्णिलोपः । उदात्तनिवृत्तिस्वरो व्यत्ययेन न प्रवर्तते । तम् उपक्षयकारिणम् अधस्पदम् एव कृधि कुरु । ईम् इत्यवधारणे । अस्मत्पादयोरधः प्रणिपतितशिरस्कं कुर्विति यावत् । " बहुलं छन्दसि " ( पा २·४·७३ ) इति शपो लुक् । " श्रुशृणुपॄकृवृभ्यश्छन्दसि " ( पा ६·४·१०२ ) इति धिभावः । " अधःशिरसी पदे " ( पा ८·३·४७ ) इत्यधःशब्दस्य संहितायां सत्वम् ॥

( तैसं २·२·७ ) इति । मृधो वैरिणो यं यजमानमभितः प्रवेपेरन् प्रकर्षेण कम्पयेयुर्भीतिमुत्पादयेयुः । अथवा [३९]राष्ट्राणि देशानभितो विनाशयितुं समियुः संगता भवेयुः । तस्य यजमानस्य रक्षायै वैमृधाय शत्रुविनाशकायेन्द्राय निर्वपेत् । स चेन्द्रोऽस्माद्यजमानात् मृधः शत्रूनपहन्ति ॥

वीति ॥ तत्र पुरोनुवाक्यामाह—' वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः । अधस्पदं तमीं कृधि यो अस्माँ२ अभिदासति ' इति ॥ हे इन्द्र, नः अस्माकं मृधः शत्रून् विशेषेण जहि । किं च पृतन्यतः अस्मान् घातयितुं सेनामिच्छतः शत्रून् नीचा न्यग्भूतान् यच्छ उपरतान् कुरु । यः च अन्यः अस्मान् अभिदासति उपक्षपयति । तम् ईम् तमपि वैरिणम् अधस्पदम् अस्मत्पादयोः प्रणतशिरस्कं कृधि कुरु ॥

३९. इ.उ-' राष्ट्राणि ' नास्ति ।

इन्द्रं क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनाम् ।
अपानुदो जनममित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकम् ॥

इन्द्रं । क्षत्रम् । अभीति । वामम् । ओजः । अजायथाः । वृषभ । चर्षणीनाम् ।
अपेति । अनुदः । जनम् । अमित्रयन्तमित्यमित्र-यन्तम् । उरुम् । देवेभ्यः । अकृणोः । उ । लोकम् ॥

---

तत्रैव याज्या— 'इन्द्र क्षत्रम्' इति त्रिष्टुप् ॥ हे इन्द्र, वामं वननीयं क्षत्रं [15]क्षत्रियस्य भावं[15] धनं वा ओजः बलं च अभि अजायथाः अभिलक्ष्य जातोऽसि । वरिष्ठेन क्षत्रादिना लक्ष्यमाणजनन इत्यर्थः । चर्षणीनां मनुष्याणां वृषभ कामानां वर्षितः अभिमतस्य दातरित्यर्थः । पूर्ववन्नाम उदात्तत्वम् । एवं सामर्थ्यमुपकारतः स्वभावतश्च प्रतिपाद्य इदानीं स्वाभिमतं प्रार्थयते— तादृशस्त्वमस्मासु अमित्रयन्तं शत्रुभावमिच्छन्तं जनम् अप अनुदः अपनुद अपकृष्य नाशय । छान्दसो लङ् । किंच— देवेभ्यः हविःप्रदानादिव्यवहारिभ्यः उरु विस्तीर्णं लोकं स्थानमकृणोः कुरु । छान्दसो लङ् । "धिन्विकृण्व्योर च" (पा ३·१·८०) इत्युप्रत्ययः । उ इति पादपूरणे अवधारणे वा । देवेभ्य इति षष्ठ्यर्थे वा चतुर्थी (पा २·३·६२ वा १) । देवानां विस्तीर्णं लोकमस्मभ्यं देहीति ॥

---

इन्द्रेति ॥ तत्र याज्यामाह—'इन्द्र क्षत्रमभि वाममोजोऽजायथा वृषभ चर्षणीनाम् । अपानुदो जनममित्रयन्तमुरुं देवेभ्यो अकृणोरु लोकम्' इति ॥ हे इन्द्र, वामं वननीयं क्षत्रं क्षत्रलक्षणम् ओजः अस्मदीयं बलं चाभिलक्ष्य अजायथाः एतत् सर्वं संपादयितुं जातोऽसि । चर्षणीनां मनुष्याणां हे वृषभ कामानां [40]वर्षयितः, अमित्रयन्तं शत्रुभावमिच्छन्तं जनम् अपानुदः [41]निराकृतवानसि । देवेभ्यः हविष्प्रदानादिव्यवहारिभ्यो यजमानेभ्यः उरुं विस्तीर्णं लोकं भोगस्थानम् अकृणोः उ कृतवानेवाऽसि ॥

मृग इति ॥ तस्यामेवेष्टौ विकल्पितां पुरोनुवाक्यामाह— 'मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगामा परस्याः । सृकं संशाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व' इति ॥

---

१५-१५. तं.ति-क्षत्रियस्वभावम् ।

---

४०. आ.हा-वर्षक; इ.ज.पा-वर्षसि । ४१. आ-तिरस्कृतवानसि; हा-तिरस्कृतवानेवासि ।

[ काम्येष्टियाज्यापुरोनुवाक्याः

मृगो न भीमः कुचरो गिरिष्ठाः परावत (४) आ जगामा परस्याः।
सृकꣳ सꣳशाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व॥

मृगः। न। भीमः। कुचरः। गिरिष्ठा इति गिरि-स्थाः।
परावत इति परा-वतः (४.)। एति। जगाम। परस्याः।
सृकम्। सꣳशायेति सम्-शाय। पविम्। इन्द्र। तिग्मम्।
वीति। शत्रून्। ताढि। वीति। मृधः। नुदस्व॥

---

याज्याविकल्पः—'मृगो न' इति त्रिष्टुप्॥ मृगः न मृग इव भीमः बिभेत्यस्मादिति भीमः। "भीमादयोऽपादाने" (पा ३.४.७४)। भयहेतुः व्याघ्रः सिंहो वा। कुचरः कुत्सितं चरति। पचाद्यच् (पा ३.१.१३४)। हिंस्रस्वभावः। गिरिष्ठाः पर्वतवासी स इव शत्रून् ताडय। यद्वा—गिरिर्मेघः गजो वा, तत्स्थः। सोऽर्जस्। परस्याः परावतः महतः दूरात् आ जगाम आगच्छति यो मृत्यं रक्षितुम्। पुरुषव्यत्ययो वा आजगाम आगच्छसि। "उपसर्गाच्छन्दसि धात्वर्थे" (पा ५.१.११८) इति वतिः। आख्यातस्य सांहितिको दीर्घश्छान्दसः। ■ त्वमित्थमागत्य हे इन्द्र, सृकं परशरीरादिषु सरणशीलं तिग्मं प्रागेव तीक्ष्णं पविं वज्रं संशाय निशितीकृत्य तेनातितीक्ष्णेन शत्रून् वि ताढि विविधं ताडय। ताडयतेर्लोटि शपो लुक्। "छन्दस्युभयथा" (पा ३.४.११७) इत्यार्धधातुकत्वाद् णिलोपः। मृधः योद्धृंश्च वि नुदस्व विविधं नुद विनाशय॥

---

हे इन्द्र, भीमः भयंकरः कुचरः प्राणिभक्षणादिरूपकुत्सिताचरणशीलः गिरिष्ठाः पर्वतनिवासी[42] मृगः न सिंहव्याघ्रादिमृग इव परस्याः परावतः [43]महतो दूरात् आ जगाम अस्मद्विरोधिनं हन्तुमागतोऽसि। 'आजगन्थाः' इति हि शाखान्तरे (मैसं ४.१२.३) मध्यमपुरुषः पठितः। सृकं परशरीरादिषु सरणशीलं तिग्मं तीक्ष्णं पविं वज्रं सꣳशाय सम्यक् तीक्ष्णं कृत्वा विशेषेण शत्रून्[44] ताडय। मृधः योद्धॄन् शत्रून् विशेषेण नुदस्व निराकुरु॥

---

४२. म४–°निवा। ४३. इ.उ.पा.श–संहतः। ४४. म४–'शत्रून्' नास्ति।

काम्येष्टियाज्यापुरोनुवाक्याः ]

वि शत्रू॑न् वि मृधो॑ नुद वि वृ॒त्रस्य॒ हनू॑ रुज।
वि म॒न्युमि॑न्द्र भामि॒तो॑ऽमित्र॑स्याभि॒दास॑तः ॥
त्रा॒तार॒मिन्द्र॑मवि॒तार॒मिन्द्र॒ꣳ हवे॑हवे सु॒हव॒ꣳ शूर॒मिन्द्र॑म्।
हु॒वे नु श॒क्रं पु॑रुहू॒तमिन्द्र॒ꣳ स्व॒स्ति नो॑ म॒घवा॑ धा॒त्विन्द्रः॑ ॥

वीति॑। शत्रू॑न्। वीति॑। मृधः॑। नु॒द। वीति॑। वृ॒त्रस्य॑। हनू॒ इति॑। रु॒ज।
वीति॑। म॒न्युम्। इ॒न्द्र॒। भा॒मि॒तः। अ॒मित्र॑स्य। अ॒भि॒दास॑त॒ इत्य॑भि-दास॑तः ॥ ५
त्रा॒तार॑म्। इन्द्र॑म्। अ॒वि॒तार॑म्। इन्द्र॑म्।
हवे॑हव॒ इति॒ हवे॑-ह॒वे। सु॒हव॒मिति॑ सु-हव॑म्। शूर॑म्। इन्द्र॑म्।
हु॒वे। नु। श॒क्रम्। पु॒रु॒हू॒तमिति॑ पु॒रु-हू॒तम्। इन्द्र॑म्।
स्व॒स्ति। नः॒। म॒घवेति॑ म॒घ-वा॒। धा॒तु॒। इन्द्रः॑ ॥ १०

अतश्च विकल्पः—' वि शत्रून् ' इत्यनुष्टुप् ॥ शत्रून् विविधं नाशय। मृधः च योद्धॄन् वि नुद विशेषतो नाशय। वृत्रस्य असुरस्य हनू वि रुज विभिन्धि। वृत्रस्य वा मेघस्य हनुस्थानीये पार्श्वे विरुज विदारय वर्षार्थं याभ्यां वर्षन्ति मेघाः। हे इन्द्र, अस्मान् अभिदासतः उपक्षपयतः अमित्रस्य शत्रोः मन्युं क्रोधं वि नुद विनाशय, भामितः अमित्रविषये क्रुद्धस्त्वम् ॥ १५

" इन्द्राय त्रात्रे पुरोडाशमेकादशकपालं निर्वपेद्बद्धो वा परियत्तो वा " ( तैसं २.२.७ ) इत्यस्य पुरोनुवाक्या—' त्रातारमिन्द्रम् ' इति त्रिष्टुप् ॥ इदि परमैश्वर्ये, इन्द्रः। ऐश्वर्यहेतून् बहून् दर्शयति—त्रातारम् अवितारं देवानां, तस्मादिन्द्रव्यपदेशभाजम्, अवितारं सर्वेषामपि तर्पयितारम् इन्द्रम् इतोऽपीन्द्रव्यपदेशभाजं, हवेहवे सुहवं सर्वेष्वाह्वानेषु सुखेनाह्वातव्यं निर्भयैः। " भावेऽनुपसर्गस्य " ( पा ३.३.७५ ) इत्यप् संप्रसारणं च। " बहुलं २०

---

वीति ॥ विकल्पितां याज्यामाह—' वि शत्रून् वि मृधो नुद वि वृत्रस्य हनू रुज। वि मन्युमिन्द्र भामितोऽमित्रस्याभिदासतः ' इति ॥ हे इन्द्र, शत्रून् विशेषेण नुद निराकुरु। मृधः योद्धॄनपि विशेषेण नुद। वृत्रस्य हनू वि रुज विशेषेण भग्नौ कुरु। त्वं भामितः क्रुद्धः सन् अभिदासतः अस्मानुपक्षपयतः अमित्रस्य वैरिणः मन्युं विशेषेण भग्नं कुरु ॥

इष्ट्यन्तरं विधत्ते—" इन्द्राय त्रात्रे पुरोडाशमेकादशकपालं निर्वपेद्बद्धो वा परियत्तो वेन्द्रमेव त्रातारꣳ स्वेन भागधेयेनोप धावति स एवैनं त्रायते " ( तैसं २.२.७ ) इति। बद्धः शत्रुभिर्निगडितः। परियत्तः शत्रुसामन्तरेण परितो भटैरवरुद्धः ॥ २५

त्रातारमिति ॥ तत्र पुरोनुवाक्यामाह—' त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम्। हुवे नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ' इति ॥ त्रातारं शत्रुबाधायाः रक्षितारम्, अवितारं महाबाधाद् रक्षितारं, शूरं बाधकानामवरोधकानां च तिरस्कारे क्षमम्। ३०

मा ते॑ अ॒स्यां॒ (५) स॑हसाव॒न् परि॑ष्टावघाय॑ भूम हरिवः परा॒दै ।
त्राय॑स्व नोऽवृ॒केभि॒र्वरू॑थै॒स्तव॑ प्रि॒यासः॑ सू॒रिषु॑ स्याम ॥
मा । ते॒ । अ॒स्याम् (५) । स॒ह॒सा॒व॒न्निति॑ सहसा–व॒न् । परि॑ष्टौ ।
अ॒घाय॑ । भू॒म॒ । ह॒रि॒व॒ इति॑ हरि–वः॒ । प॒रा॒दा इति॑ परा–दै ॥
त्राय॑स्व । नः॒ । अ॒वृ॒केभिः॑ । वरू॑थैः । तव॑ । प्रि॒यासः॑ । सू॒रिषु॑ । स्या॒म॒ ॥
५

छन्दसि " (पा ६.१.३४) इति संप्रसारणे आकारान्तत्वाभावात् खल्वेव भवति । [v]शूरं महाबलं सर्वजेतारं तथाप्याहूतमात्र[45] एवागच्छन्तम् [v]इन्द्रम् इतोऽपीन्द्रशब्दाभिधेयं, [v]शक्रं सर्वार्थसाधनशक्तं [v]पुरुहूतं बहुभिर्यजमानैराहूतम्, अतोऽप्यासादितेन्द्रत्वं देवेश्वरं [v]हुवे आह्वयामि । शपो लुक् । पूर्ववत् संप्रसारणम् । [v]नु इति पादपूरणे । सः [v]मघवा प्रशस्तैर्धनैः अन्नादिभिर्हवि-
१० रादिभिश्च तद्वान् अतश्चेन्द्रपदाभिधानार्हः [v]नः अस्मभ्यं [v]स्वस्ति अविनाशं [v]धातु ददातु । शपो लुक् । " मघवा बहुलम् " (पा ६.४.१२८) इति निपात्यते । " इत्थंभूतेन कृतमिति च " (पा ६.२.१४९) इति पुरुहूतशब्दोऽन्तोदात्तः । यद्वा—पुरुषु स्थानेषु हूतः पुरुहूतः । " तृतीया कर्मणि " (पा ६.२.४८) इति प्राप्त्यभावात् कृदुत्तरपदप्रकृतिस्वरत्वमेव निपात्यते (पा ६.२.१३९)। अत्र पुनः पुनः इन्द्रोक्तिरस्माकं सर्वार्थेषु त्वमेव शरणं नान्य
१५ इत्यादरसूचनार्था ॥

तत्रैव याज्या—' मा ते अस्याम् ' इति त्रिष्टुप् ॥ हे [v]सहसावन् बलवन् इन्द्र । सह एव सहसं बलं तद्वान् । " अन्येषामपि दृश्यते " (पा ६.३.१३७) इति दीर्घत्वम् । यद्वा—

[v]हवेहवे [v]सुहवं [46]तस्मिन् तस्मिन्[47] होमे [46]सुखेनाऽऽह्वातुं शक्यम् । [v]शक्रं सर्वेषु कार्येषु शक्तियुक्तम् । [v]पुरुहूतं बहुभिर्यजमानैराहूतम् [v]इन्द्रं [v]हुवे [v]नु आह्वयाम्येव । [47]प्रतिविशेषणमिन्द्र-
२० शब्दावृत्तिर्वाक्यभेदार्थम् । त्रातारमिन्द्रं हुवे । अवितारमिन्द्रं हुव इत्येवं वाक्यभेदः । तैश्च बहुभिर्वाक्यैः आदरातिशयः प्रदर्श्यते । 'इन्द्राऽऽगच्छ हरिव आगच्छ'[M] इत्यादौ तद्दर्शनात् । लोकेऽप्यतियालं पुत्रमुपलाल-यितुं पितरागच्छ भ्रातरागच्छेत्यादौ [48]तद्दृश्यते । [v]मघवा धनवान् [v]इन्द्रः [v]नः अस्मभ्यं [v]स्वस्ति [v]धातु अविनाशं ददातु ॥

मेति ॥ तत्रैव याज्यामाह—' मा ते अस्यां सहसावन् परिष्टावघाय भूम हरिवः परादै । त्रायस्व
२५ नोऽवृकेभिर्वरूथैस्तव प्रियासः सूरिषु स्याम ' इति ॥ हे [v]सहसावन् बलवन् [v]इन्द्र, [v]अस्यां [v]परिष्टौ परित्राणार्थं क्रियमाणायामिष्टौ वयम् [v]अघाय वैकल्याय [v]मा [v]भूम । अस्मदनुष्ठिते कर्मणि वैकल्यं मा भूदित्यर्थः ॥ हे [v]हरिवः, हरितिरश्वैस्तद्वन् । [v]परादै परादानं वयं मा भूम कदाचिदप्यवज्ञां मा करवाम

१६. तै.ति.पं-'प्याहूत ।

४५–४५. आ.क.दा-सर्वस्मिन् । ४६. ति–सुखेन होतुम् । ४७. द.ज-प्रतिविशेषणशब्दा' ।
३० [M][ द. यजु 1·1; साम २·३·४·१८ ] । ४८. आ–' तद् ' नास्ति ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ।

ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥

अनवः । ते । रथम् । अश्वाय । तक्षन् । त्वष्टा । वज्रम् । पुरुहूतेति पुरु-हूत । द्युमन्तमिति द्यु-मन्तम् ॥

ब्रह्माणः । इन्द्रम् । महयन्तः । अर्कैः । अवर्धयन् । अहये । हन्तवै । उ ॥

अवतुप्रत्ययश्छान्दसः । ते तव अस्यां परिष्टौ परितः सर्वतः सर्वस्यामिष्टौ । छान्दसं ह्रस्वत्वम्, ५
शकन्ध्वादित्वाद्वा पररूपत्वम् ( पा ६·१·९४ वा ४ ) । अघाय पापाय कर्मवैगुण्यलक्षणाय
मा भूम विगुणकारिणो न भवेम; सर्वेणापि प्रकारेणाविगुणो यज्ञोऽस्त्विति यावत् । हे हरिवः
हरिवन् हरिभिः हयैः तद्वान् । " मतुवसोः " ( पा ८·३·१ ) इति रुत्वम् । परादै परादानाय
च मा भूम प्रत्याख्यानाय । अन्येभ्यो दानं परादाः । " क्विप् च " ( पा ३·२·७६ ) इति क्विप् ।
चतुर्थ्येकवचने आकारलोपाभावश्छान्दसः । यद्वा—तुमर्थे कैप्रत्ययः, ( द्र. काशिका पा ३·४·१० ) १०
यथा—' प्रयै ' इति । परादातुं च वयं मा भूम कदापि त्वया त्याज्या मा भूमेत्यर्थः । तस्मात्
नः अस्मान् त्रायस्व रक्ष अवृकेभिः अवृकैश्चोरादिहिंसकरहितैः वरूथैः गुप्तियुक्तैर्गृहैः,
ईदृशगृहवासिनः कृत्वा त्रायस्वेति । " नञ्सुभ्याम् " ( पा ६·२·१७२ ) इत्यवृकशब्दोऽन्तोदात्तः ।
किंबहुना—सूरिषु मेधाविषु मध्ये वयमेव तव प्रियासः प्रियाः स्याम भवेम । " आज्जसेरसुक् "
( पा ७·१·५० ) । " युष्मदस्मदोर्ङसि " ( पा ६·१·२११ ) इति तवशब्द आद्युदात्तः ॥ १५

" इन्द्रायार्काश्वमेधवते पुरोडाशमेकादशकपालं निर्वपेद्यं महायज्ञो नोपनमेत् " ( तैसं
२·२·७ ) इत्यस्य पुरोनुवाक्या—' अनवस्ते ' इति त्रिष्टुप् ॥ हे पुरुहूत बहुभिराहूत इन्द्र,

इत्यर्थः । त्वं नः अस्मान् अवृकेभिः हिंसकरहितैः वरूथैः गृहैः त्रायस्व । तादृशान् गृहान् प्रयच्छ ।
सूरिषु विद्वत्सु यजमानेषु मध्ये वयं तव प्रिया भवेम ॥

इष्ट्यन्तरं विधत्ते—" इन्द्रायार्काश्वमेधवते पुरोडाशमेकादशकपालं निर्वपेद्यं महायज्ञो नोप- २०
नमेदेते वै महायज्ञस्यान्त्ये तनू यदर्काश्वमेधाविन्द्रमेवार्काश्वमेधवन्तꣳ स्वेन भागधेयेनोप धावति स
एवास्मा अन्ततो महायज्ञं च्यावयत्युपैनं महायज्ञो नमति " ( तैसं २·२·७ ) इति ॥ अश्वमेधयज्ञस्य
साधनभूतो योऽग्निः सोऽर्कः । यश्च तत्फलभूत आदित्यः सोऽश्वमेधः । अत एव पञ्चमकाण्डे पञ्चार्काहुति-
विधिशेषार्थवादे समाम्नायते—" अर्को वा एष यदग्निरसावादित्योऽश्वमेधो यदेता आहुतीर्जुहोत्यर्काश्व-
मेधयोरेव ज्योतीꣳषि संदधाति " ( तैसं ५·७·५ ) इति । अश्वमेधब्राह्मणेऽप्याम्नायते— " अग्निर्वा २५
अश्वमेधस्य योनिरायतनम् । सूर्योऽग्नेर्योनिरायतनम् । यदश्वमेधेऽग्निं चित्य-उत्तरवेदिं चिनोति । तावर्का-
श्वमेधौ " ( तैब्रा ३·९·२१ ) इति । वाजसनेयिनोऽपि चित्यस्याग्नेरुपासने समामनन्ति— " एष वा
अश्वमेधो य एष तपति तस्य संवत्सर आत्माऽयमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ "
( शब्रा १०·६·५·८ ) इति । "[१]इन्द्रः स्तुतयोः"[१] अग्न्यादित्ययोः स्वामित्वादर्काश्वमेधवानित्युच्यते । यं

२७. ति-अर्धैः । ३०

४९-४९. ति-इन्द्रस्य तयोः; क-इन्द्रस्तुतयोः ।

[ काम्येष्टियाज्यापुरोनुवाक्याः

वृष्णे यत् ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः ।
अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून् ॥ १२ ॥

[ वृत्रहत्येऽनु गायत्रिणोऽध्वराणां परावतोऽस्यामष्टाचत्वारिंशच्च ]

वृष्णे । यत् । ते । वृषणः । अर्कम् । अर्चान् । इन्द्र । ग्रावाणः । अदितिः । सजोषा इति स-जोषाः । अनश्वासः । ये । पवयः । अरथाः ।
इन्द्रेषिता इतीन्द्र-इषिताः । अभ्यवर्तन्तेत्यभि-अवर्तन्त । दस्यून् ॥ १२ ॥

[ सं त्वा ध्रुवोऽस्यग्निर्मा बर्हिषोऽहमा प्यायतामगन्म यथा वै यो वै श्रद्धां प्रजापतिर्यज्ञान् ध्रुवोऽसीत्याह यो वै संतदशमिन्द्रं वो द्वादश ] [ सं त्वा बर्हिषोऽहं यथा वा एवं विद्वाञ्छीर्षन्सहस्रावन्नेकपञ्चाशत् ] [ सं त्वा सिञ्चाम्यभ्यवर्तन्त दस्यून् ]

ते तव रथम् अनयः मनुष्याः तक्षन् तक्षन्तु संस्कुर्वन्तु । लङ्[18-18] लोडर्थे । अडभावः छान्दसः[18] । अश्वाय अश्वं योक्तुं यथा योग्यो भवति तथा संस्कुर्वन्तु । यद्वा—अश्वाय व्याप्तिमते तुभ्यं यथा पर्याप्तो भवति त्वष्टा[19] देवानां शिल्पी वज्रं तक्षतु तीक्ष्णीकरोतु । कीदृशम् ? द्युमन्त दीप्तिमन्तम् । किं च—ब्रह्माणः ब्राह्मणाश्च त्वाम् इन्द्रम् ईश्वरम् अर्कैः मन्त्रैः हविर्लक्षणैरन्नैर्वा महयन्तः पूजयन्तः अवर्धयन् वर्धयन्तु यशसा । किमर्थं ? अहये अघाय अहिंसनाय आगत्य । हन्तीत्यहिः सर्पादिः । "आङि श्रिहनिभ्यां ह्रस्वश्च" (उ ५८७) इतीण्प्रत्ययः । कर्मणि चतुर्थी (द्र. पाभा १·४·३२) । हन्तवे हन्तुम् । "तुमर्थे सेसेन्" (पा ३·४·९) इति तवैप्रत्ययः । "अन्तश्च तवै युगपत्" (पा ६·१·२००) इत्याद्यन्तयोः उदात्तत्वम् । उः पादपूरणे । त्वं चास्माकं महायज्ञमुपनयेति ॥

तत्रैव याज्या—'वृष्णे' इति त्रिष्टुप् ॥ हे इन्द्र, ते तुभ्यं वृष्णे वर्षित्रे अभिमतदात्रे । षष्ठ्यर्थे चतुर्थी (पा २·३·६२ वा १) । तव वर्षितुः अर्कम् अर्चनीयामाज्ञाम्, अर्चनीयं वा ते तव यागम् अर्चान् अर्चयन्ति पूजयन्ति । लेट्याडागमः । के ? वृषणः ग्रावाणः वर्षितारो मेघाः वृष्टिं कुर्वन्तस्तवार्कमर्चयन्ति[20] मेघा इत्यर्थः । "वा पपूर्वस्य निगमे"

यजमान प्रत्यश्वमेधराजसूययो[50] महायज्ञो नोपनमेत्र आप्नुयात् । स यजमानोऽर्कोश्वमेधस्वामिने निर्वपेत् । यावेतावर्काश्वमेधशब्दवाच्यावग्न्यादित्यौ तावुभौ महायज्ञस्याश्वमेधस्यान्त्ये चन् प्रारम्भसमाप्तिकोट्योर्वर्तमानशरीरे । चित्याग्निः साधनत्वेन प्रारम्भकोटौ वर्तते । आदित्यः फलरूपत्वेन समाप्तिकोटिगामी । एवेन्द्र एवास्मै[51] यजमानस्य समीपे महायज्ञं प्रेरयति । स च महायज्ञ एवं यजमानमुपनमति प्राप्नोति ॥

अनय इति ॥ तत्र पुरोनुवाक्यामाह—'अनयस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम् । ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ' इति ॥ हे पुरुहूत बहुभिर्यजमानैराहूतेन्द्र, ते तव रथम् अनयः मनुष्याः तक्षन् तक्षन्तु संस्कुर्वन्तु । किमर्थम् ? अश्वाय अश्वं संयोक्तुम् । त्वष्टा

१८-१८. लोडन्यतरः । १९. तं.ति-देव° । २०. तं-°मर्चन्ति ।

५०. क-°सूर्यादिरूपः । ५१. क-'एवास्मे' नास्ति ।

काम्येष्टियाज्यापुरोनुवाक्याः ]

( पा ६.४.९ ) इति दीर्घाभावः । अदितिः पृथिवी च सजोषाः समानप्रीतिः त्वया तैर्ग्रावभिः मैथैरानुकूल्यं भजमाना सस्याद्युत्पादयतस्तव कर्मार्कमर्चयति । यत् यदा एवमेते कुर्वन्ति, तदानीं दुष्टात्मानो दस्यवोऽपि त्वयैव हन्तव्या इति तत्प्रार्थयते— अनश्वासः अश्वरहिताः । "आज्जसेरसुक्" ( पा ७.१.५० ) । अरथाः रथरहिताः अश्वरथमनपेक्षमाणाः । "नञ्सुभ्याम्" ( पा ६.२.१७२ ) इत्युत्तरपदान्तोदात्तत्वम् । ये पवयः तवायुधविशेषाः इन्द्रेषिताः सर्वदेन्द्रेणैव प्रेषिताः अन्येन प्रेषितुमशक्याः; ते दस्यून् अभ्यवर्तन्त दस्यूनभिवर्तन्ताम् आभिमुख्येन हन्तुं वर्तन्ताम् । स्वरणादिद्वारा अस्मदुपक्षपयितारो दस्यवः । तानभिभूय पराजितान् कृत्वा सर्वदाऽस्मान् रक्षन्तो वर्तन्तामिति भावः । छान्दसो लङ् । एवं सर्वस्य लोकस्य रक्षको महात्मा त्वम्, अतोऽस्माकमपि महायज्ञमुपनयेति ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये प्रथमे काण्डे षष्ठे प्रपाठके द्वादशोऽनुवाकः ॥

समाप्तश्च प्रपाठकः ॥

देवशिल्पी[५२] द्युमन्तं दीप्तिमन्तं वज्रं तक्षतु । ब्रह्माणः ब्राह्मणा ऋत्विजः अर्कैः अर्चनसाधनैर्मन्त्रैः महयन्तः पूजयन्तः इन्द्रम् अवर्धयन् यशसा वर्धयन्तु । अहये अहिम् अयं महायज्ञप्राप्तिप्रतिबन्धकपरं हन्तवै उ अवश्यं हन्तुमवर्धयन्नित्यन्वयः ॥

वृष्ण इति ॥ याज्यामाह—'वृष्णे यत्ते वृषणो अर्कमर्चानिन्द्र ग्रावाणो अदितिः सजोषाः । अनश्वासो ये पवयोऽरथा इन्द्रेषिता अभ्यवर्तन्त दस्यून्' इति ॥ हे इन्द्र, यत् यदा वृष्णे ते कामाभिवर्षिणस्तव संबन्धिनम् अर्कम् अर्चनीयं वृषणः वर्षणं( कं ) फलाभिवर्षकं यागं ग्रावाणः साधनभूता दृषदुपलादयः पदार्थाः अर्चान् अर्चयन्ति अलंकुर्वन्ति । तदानीम् अदितिः वेदिरूपा पृथिवी सजोषाः त्वया समानप्रीतिर्भवतु । इन्द्रेषिता इन्द्रप्रेरिता ये पवयः वज्राः सन्ति तेऽपि अरथाः अनश्वासः रथाश्वनिरपेक्षा एवं दस्यून् [५३]महायज्ञप्राप्तिप्रतिबन्धकानसुरान् अभ्यवर्तन्त अभिलक्ष्य हन्तुं प्रवर्तन्ताम् ॥

अत्र विनियोगसंग्रहः—

"इन्द्रं वो विश्वतोऽसुर्यमिश्रावैन्द्र ऋचोर्द्वयम्[५४] ।
इन्द्राग्निभ्यामवयागे स्याद्यस्मिन् घर्मवयज्ञो ॥ १ ॥
इन्द्रं स्यादर्कवयागे तिस्रोऽहोमुग्यआवृषः ।
[?] वैमृधे[५५] वतसः स्युस्त्रातारं त्रातृमघज्ञौ ॥
अनवोऽर्काश्ववयागे मन्त्राः सप्तदशेरिताः ( ऋचा एकोनविंशतिः )" ॥२॥ इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये
प्रथमकाण्डे षष्ठप्रपाठके द्वादशोऽनुवाकः ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्विद्यातीर्थमहेश्वरावतारस्य श्रीमद्राजाधिराजपरमेश्वरस्य श्रीवीरबुक्कमहाराजस्याऽऽज्ञापरिपालकेन माधवाचार्येण विरचिते वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे षष्ठः प्रपाठकः ॥

५२. आ.पा.हा–देवः शिल्पी । ५३. इ.उ–महायज्ञप्रति॰ । ५४. म४–ऋचोर्द्वयोः । ५५. आ. क.हा–नो मृधे ।

## ( अथ प्रथमकाण्डे सप्तमः प्रपाठकः )

हरिः ॐ ॥ पाकयज्ञं वा अन्वाहिताग्नेः पशव उप तिष्ठन्ते

पाकयज्ञमितिं पाक–यज्ञम् । वै । अन्विति । आहिताग्नेरित्याहित–अग्नेः । पशवः । उपेति । तिष्ठन्ते ।

---

अथ दर्शपूर्णमासयोरेव याजमानशेषस्य ब्राह्मणं प्राजापत्यं काण्डम् । तत्रेडाया आह्रियमाणाया अनुमन्त्रणं विधातुमाह—' पाकयज्ञम् ' इत्यादि ॥ अत्रेदमुक्तमाचार्येण—" हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्त पाकयज्ञसंस्थाः । अपरिमिता इत्येके ब्रुवते यत्किंचान्यत्र[1] विकाराद्धूयते सर्वास्ताः पाकयज्ञसंस्थाः " ( बौगृ १·१·१ ) इति । पक्वमात्रनिर्वर्तिताः पाकयज्ञाः । अन्ये त्वाहुः—" अल्पयज्ञाः पाकयज्ञाः " इति । पाकयज्ञम् अनु आहिताग्नेः पशवः उप तिष्ठन्ते यजमानमेव श्रयन्ते । यद्वा—

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥
प्रपाठके सप्तमेऽस्मिन्ननुवाकास्त्रयोदश ।
यजमानब्राह्मणस्य शेषः षट्स्वादिमेषु हि ॥
वाजपेयस्य मन्त्रास्तु षट्स्वन्येष्वथ याज्यकाः ।
इडानुमन्त्रणं तस्या इडायाश्च प्रशंसनम् ॥
अन्वाहार्योऽथ मन्त्रानुवाक्याख्या त्रिषु स्मृता ।
रथमन्त्रा धावनं च रोहणं वाजहोमकः[1] ॥
वज्जित्यभिप्रायाख्या इत्यष्टौ अनुवाकगाः ॥

तत्र प्रथमेऽनुवाक इडानुमन्त्रणमुच्यते—

पाकयज्ञमिति ॥ तदेतद्विधातुं प्रस्तौति—' पाकयज्ञं वा अन्वाहिताग्नेः पशव उप तिष्ठन्त इडा खलु वै पाकयज्ञः सैषाऽन्तरा प्रयाजानूयाजान् यजमानस्य लोकेऽवहिता ' इति । पाकयज्ञस्य स्वरूपमापस्तम्ब-सूत्रव्याख्यातृभिरुक्तम्—" औपासनहोमो वैश्वदेवं पार्वणमष्टका मासि श्राद्धं सर्पबलिरीशानबलिरिति सप्त पाकयज्ञसंस्थाः " ( धूर्तस्वामिभाष्य—आपश्रौ १·१·१ ) इति । बौधायनोऽप्याह—" हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्त पाकयज्ञसंस्थाः " ( बौगृ १·१·१ ) इति । अन्ये त्वाहुः—" अल्पयज्ञाः पाकयज्ञाः " । आश्वलायनोऽप्याह—" त्रयः पाकयज्ञा हुताः अग्नौ हूयमाना अनग्नौ प्रहुता ब्राह्मणभोजने ब्रह्मणि हुताः " ( आश्वगृ १·१·२–३ ) इति ।

एतेषां मध्ये यं कंचिदपि आहिताग्नेः पाकयज्ञम् अनु गतायाः पशवः [2]अवस्थिता भवन्ति पाकयज्ञेन सम्पन्ना इत्यर्थः । अत्र रिडाभक्षणमेव पाकयज्ञः, ब्रह्मणि हुतत्वात् । अतोऽनेनापि इडाभक्षणेन

---

[1]. पं—यच्च किंचान्यत्र; ति.नि—किंचान्यत्र ।

---

[1]. म४—वाजहोमकः । [2]. तं—नी—' अवस्थिताः ' नास्ति ।

इडानुमन्त्रणम्]

इडा खलु वै पाकयज्ञः सैषाऽन्तरा प्रयाजानूयाजान् यजमानस्य लोकेऽवहिता तामाह्रियमाणामभि मन्त्रयेत सुरूपवर्षवर्ण एहीति पशवो वा इडा पशूनेवोप ह्वयते यज्ञं वै देवा अदुहन् यज्ञोऽसुराꣳ अदुह्नचेऽसुरा यज्ञदुग्धाः पराऽभवन् यो वै यज्ञस्य दोहं विद्वान् (१) यजतेऽप्यन्यं यजमानं दुहे

इडा। खलु। वै। पाकयज्ञ इति पाक–यज्ञः। सा। एषा। अन्तरा। प्रयाजानूयाजानिति प्रयाज–अनूयाजान्। यजमानस्य। लोके। अवहितेत्यव–हिता। ताम्। आह्रियमाणामित्या–ह्रियमाणाम्। अभीति। मन्त्रयेत। सुरूपवर्षवर्ण इति सुरूप–वर्षवर्णे। एति। इहि। इति। पशवः। वै। इडा। पशून्। एव। उपेति। ह्वयते। यज्ञम्। वै। देवाः। अदुहन्। यज्ञः। असुरान्। अदुहत्। ते। असुराः। यज्ञदुग्धा इति यज्ञ–दुग्धाः। परेति। अभवन्। यः। वै। यज्ञस्य। दोहम्। विद्वान् (१)। यजते। अपीति। अन्यम्। यजमानम्। दुहे।

आहिताग्नेरिति कर्मणि षष्ठी, आहिताग्निं पशव इति। संगतिकरणे आत्मनेपदम्*। "क्रियाग्रहणं कर्तव्यम्" (द. पाभा १·४·३२) इति कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी। "अनुर्लक्षणे" (पा १·४·८४) इत्यनोः कर्मप्रवचनीयत्वम्। 'इडा खलु' इत्यादि। इडायाः प्राशनं पाकयज्ञः। 'सैषा' इति। "अन्तरान्तरेण" (पा २·३·४) इति द्वितीया। यजमानस्य लोके स्थाने अवहिता अवस्थिता। 'ताम्' इत्यादि। पशुसाधनत्वात्ताच्छब्द्यं 'पशव इडे' इति। तस्मात् 'इड एहि' इति पशूनेवोपह्वयते। "निसमुपविभ्यो ह्वः" (पा १·३·३०) इत्यात्मनेपदम्॥

'यज्ञं वै' इत्यादि॥ दुहेर्लङि "बहुलं छन्दसि" (पा ७·१·८) इति रुट्। "वैत्रावेति च छन्दसि" (पा ८·१·६४) इति निघाताभावः। अदुहत् इति व्यत्ययेन

पशवो लभ्यन्ते। 'सा' इयमिडा यजमानस्य लोके फलसाधने यज्ञे प्रयाजानूयाजमध्ये व्यवस्थिता। प्रयाजाज्यभागप्रधानस्विष्टकृद्भ्यः ऊर्ध्वमनूयाजेभ्यश्च[3] प्रागिडाया अनुष्ठेयत्वात्। एतच्च हौत्रकाण्डे (तैब्रा ३·२·१) स्विष्टकृद्याज्याया अनूयाजयाज्यायाश्च मध्य इडोपाह्वानमन्त्रपाठादवगम्यते॥

तामिति॥ विधत्ते—'तामाह्रियमाणामभि मन्त्रयेत सुरूपवर्षवर्ण एहीति पशवो वा इडा पशूनेवोप ह्वयते' इति॥ ताम् इडाम् आह्रियमाणाम् अवदाय होतुस्समीपमानीयमानाम्। तत्प्रकारमापस्तम्ब आह—"इडापात्रमुपस्तीर्य सर्वेभ्यो हविर्भ्य इडाꣳ समवद्यति। चतुरवत्तां वा पञ्चावत्ताम्" (आपश्रौ ३·१·५) इति। "अभिघार्येडाꣳ होत्रे प्रदाय" (आपश्रौ ३·२·१) इति च॥ इडादेवताया पशुसाधनत्वाद्गोरूपत्वाच्च मन्त्रगतेन 'एहि' इति पदेन पशून् एव उप ह्वयते॥

यज्ञमिति॥ 'सा मे सत्याशीः' इत्येतं मन्त्रभागं व्याख्यातुं प्रस्तौति—'यज्ञं वै देवा अदुहन् यज्ञोऽसुराꣳ अदुहत्तेऽसुरा यज्ञदुग्धाः पराऽभवन् यो वै यज्ञस्य दोहं विद्वान् यजतेऽप्यन्यं यजमानं

*[द. पा १·३·२५ वा १]। २. पै.प्रकाशनम्।

३. आ–ना–हा–सन। ४. द.उ.ति.त्रि४.ना.पा.म४.हा–'च' नास्ति।

[इडानुमन्त्रणम्

सा मे सत्याऽऽशीरस्य यज्ञस्य भूयादित्याहैष वै यज्ञस्य दोहस्तेनैवैनं दुहे प्रत्ता वै गौर्दुहे प्रत्तेडा यजमानाय दुह एते वा इडायै स्तना इडोपहूतेति वायुर्वत्सो

सा। मे। सत्या। आशीरित्या–शीः। अस्य। यज्ञस्य। भूयात्। इति। आह। एषः। वै। यज्ञस्य। दोहः। तेन। एव। एनम्। दुहे। प्रत्ता। वै। गौः। दुहे। प्रत्ता। इडा। ५ यजमानाय। दुहे। एते। वै। इडायै। स्तनाः। इडा। उपहूतेत्युप–हूता। इति। वायुः। वत्सः।

स्लेद्। यज्ञेन दुग्धाः यज्ञदुग्धाः। "तृतीया कर्मणि" (पा ६.२.४८) इति पूर्वपद-प्रकृतिस्वरत्वम्।। पराभवनं विनाशः। दोहनं हि रिक्तीकरणम्। 'दुह प्रपूरणे' इति। प्रशब्दो हि धात्वर्थनिवृत्तिमाचष्टे, प्रस्मरणं प्रस्थानमिति यथा। यज्ञस्तु देवैर्दुग्धोऽपि स्वमहिम्ना पुनः पुनराप्यायते गौरिव।

१० 'यो वै' इत्यादि। 'सा मे सत्याशीः' इत्यादिवचनं यज्ञस्य दोहः। अनेन मन्त्रेण यज्ञोऽसुरानधुक्षत्। दुहे इति पूर्ववत् तलोपः।

'प्रत्ता' इत्यादि॥ पयः प्रदातुमारब्धवती प्रत्ता वत्सलेहनेन प्रस्नुतस्तनी गौः। आदिकर्मणि क्तः। "अच उपसर्गात्तः" (पा ७.४.४७) इति तत्वम्। दुहे दुग्धे भूयिष्ठं क्षीरं क्षारयति। एवं प्रत्ता होत्रे अध्वर्युणा। प्रदानेन इडा यजमानाय दुग्धे तस्मादिडां १५ प्रददातीति। 'एते वा' इत्यादि। 'इडोपहूता' इत्यादयो मन्त्राः अस्याः स्तनस्थानीयाः; दोहन-साधनत्वात् स्तनत्वेन रूप्यन्ते, स्तनापेक्षत्वात् दोहस्य। वायुर्वत्सस्थानीयः प्राणवृत्तिरूपत्वात्।

दुहे' इति॥ दोहनं रिक्तीकरणम्। गां दोग्धीत्यत्र तथा दर्शनात्। देवाः प्रथमं यज्ञम् अदुहन् अदुहन् तत्रत्यसारफलस्वीकारेण रिक्तीचक्रुः। स च यज्ञः असुरान् अदुहत् तदीयसारापहारेण रिक्ती-चकार, ततस्ते पराभूताः। यो यजमानो देवकर्तृकं यज्ञरिक्तीकरणं यज्ञकर्तृकमसुररिक्तीकरणं च विद्वान् २० यजते [illegible] अन्यम् अपि यजमानं दुहे रिक्तीकरोति। एतस्य वाक्यस्य मन्त्रप्रशंसारूपत्वादन्यस्य यजमानस्य न काचित् हानिः॥

सेति॥ व्याचष्टे—'सा मे सत्याऽऽशीरस्य यज्ञस्य भूयादित्याहैष वै यज्ञस्य दोहस्तेनैवैनं दुहे' इति॥ 'उपहूतोऽयं यजमान उत्तरस्यां देवयज्यायामुपहूतः' इत्यादिका येयमाशीस्तद्वानमन्त्रगता सेयमस्य यज्ञस्य संबन्धिन्याशीर्मम सत्या भूयात् इत्येवंरूपो यज्ञदोहस्तेनैवान्यं यजमानं दोग्धि॥

२५ प्रत्तेति॥ वायुस्थानं विधातुं प्रस्तौति—'प्रत्ता वै गौर्दुहे प्रत्तेडा यजमानाय दुह एते वा इडायै स्तना इडोपहूतेति वायुर्वत्सः' इति। प्रत्ता वत्सलेहनेन प्रस्नुतस्तनी गौः दुहे पयः क्षारयति तद्वदत्र इडा प्रत्ता सती यजमानस्य फलं दोग्धि। तस्या इडायाः इडोपहूतेत्यादिमन्त्रभागाः स्तनाः, वायुः वत्सः॥

३-३. त्रि.पं–हर्विरिक्तीकरणम्; ति–हर्वे (?) रिक्तीकरणम्। ४. तं–ति.वत्सलोमेन।

३० ५. ति.त्रि४,म४–'अदुहन्' नास्ति। ६–६. म४–प्रत्ता वत्सदानेन; तं.त्रि–वत्सलेहनेन।

[इडानुमन्त्रणम्]

यर्हि होतेडामुपह्वयेत तर्हि यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेन्(२) मात्रे वत्समुपावसृजति सर्वेण वै यज्ञेन देवाः सुवर्गं लोकमायन् पाकयज्ञेन मनुरश्राम्यत् सेडा मनुमुपावर्तत तां देवासुरा व्यह्वयन्त प्रतीचीं देवाः पराचीमसुराः

यर्हि । होता । इडाम् । उपह्वयेतेत्युप—ह्वयेत । तर्हि । यजमानः । होतारम् । ईक्षमाणः । वायुम् । मनसा । ध्यायेत् (२) । मात्रे । वत्सम् । उपावसृजतीत्युप—अवसृजति । सर्वेण । वै । यज्ञेन । देवाः । सुवर्गमिति सुवः—गम् । लोकम् । आयन् । पाकयज्ञेनेति पाक—यज्ञेन । मनुः । अश्राम्यत् । सा । इडा । मनुम् । उपावर्ततेत्युप—आवर्तत । ताम् । देवासुरा इति देव—असुराः । वीति । अह्वयन्त । प्रतीचीम् । देवाः । पराचीम् । असुराः । सा । देवान् । उपावर्ततेत्युप—आवर्तत । ५

'यर्हि' इत्यादि । "अनद्यतने र्हिलन्यतरस्याम्" (पा ५·३·२१) इति र्हिल् । 'वायुम्' इत्यादि । किं कृतं भवतीत्याह—'मात्रे' इति । दोहार्थं मातृसकाशं वत्सं प्रापयती- १० त्यनेन प्रदेशान्तरमृता एतेनेति । [......न्तरं गता एव ते इति] । "उदात्तयणः" (पा ६·१·१७४) इति चतुर्थ्या उदात्तत्वम् ॥

'सर्वेण' इत्यादि ॥ अश्राम्यत् पाकयज्ञमात्रानुष्ठानतत्परोऽभवत् । ततः सा इडा मनुम् उपावर्तत । तस्मादियं मानवीत्युच्यत इत्यभिप्रायः । 'ताम्' इत्यादि । व्यह्वयन्त विविधमाह्वयन् । पूर्ववदात्मनेपदम् । प्रतीचीं स्वात्माभिमुखावस्थानां, पदाभ्यासात् । "चौ" १५ (पा ६·१·२२२) इति पूर्वपदस्य दीर्घत्वमन्तोदात्तत्वं च । पराचीं पराङ्मुखावस्थानाम्, पदाभ्यासाभावात् । "अनिगन्तोऽञ्चतौ" (पा ६·२·५२) इति गतेः प्रकृतिस्वरत्वं च । केचिदाहुः—इडोपहूतेति प्राची, उपहूतेडेति पराची ।

यर्हीति ॥ विधत्ते—'यर्हि होतेडामुपह्वयेत तर्हि यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेन्मात्रे वत्समुपावसृजति' इति ॥ यर्हि यस्मिन्काले ॥ २०

सर्वेणेति ॥ इडोपहूतेत्यादिमन्त्रभागप्रयोगे हेयोपादेयपक्षौ विधातुं प्रस्तौति—'सर्वेण वै यज्ञेन देवाः सुवर्गं लोकमायन् पाकयज्ञेन मनुरश्राम्यत् सेडा मनुमुपावर्तत तां देवासुरा व्यह्वयन्त प्रतीचीं देवाः पराचीमसुराः सा देवानुपावर्तत पशवो वै तद्देवानवृणत पशवोऽसुरानजहुः' इति । मनुसहिताः सर्वे देवाः कृत्स्नेन दर्शपूर्णमासयागेन स्वर्गलोकं प्राप्तुमुद्यताः । तत्र मनुः पाकयज्ञेन श्रान्तोऽभूत् । "इडा खलु वै पाकयज्ञः" इत्युक्तम् । अतो मनुर्होता सम्यगिडोपाह्वान एव तात्पर्यवानभूदित्युक्तं भवति । २५ सा च इडा देवता तात्पर्यवन्तं मनुम् उपगतवती । तां दृष्ट्वा देवाश्चासुराश्च परस्परव्यत्ययेन आह्वयन्त[10] । देवाः[11] प्रतीचीं संमुखामुपाह्वयन्त । असुराः[12-]पराचीं विमुखामुपाह्वयन्त[-13] । इडोपहूते-

५. पं-प्रकृतिस्वरत्वमन्तो° ।

७. तं.ति.त्रि४.म४-इति ह युक्तम् । ८. तं.ति-दृष्ट्वा । ९. इ.उ.ना.पा.हा-परस्परं व्यत्य° । १०. क.तं.ति.त्रि४.म४-इडामुपाह्वयन्त । ११. आ.क.ना.हा-ते देवाः । १२-१३. आ.ना.हा- ३० पराचीनमुखम् ।

सा देवानुपार्वर्तत पशवो वै तद्देवानवृणत पशवोऽसुरानजहुर्यं कामयेतापशुः स्यादिति परांचीं तस्येडामुप ह्वयेतापशुरेव भवति यं (३) कामयेत पशुमान्त्स्यादिति प्रतीचीं तस्येडामुप ह्वयेत पशुमानेव भवति ब्रह्मवादिनो वदन्ति स त्वा इडामुप ह्वयेत य इडामुपहूयाऽऽत्मानमिडायामुपह्वयेतेति सा नः प्रिया

५ सुप्रतूर्तिर्मघोनीत्याहेडामेवोपहूयाऽऽत्मानमिडायामुप ह्वयते

पशवः । वै । तत् । देवान् । अवृणत । पशवः । असुरान् । अजहुः । यम् । कामयेत । अपशुः । स्यात् । इति । पराचीम् । तस्य । इडाम् । उपेति । ह्वयेत । अपशुः । एव । भवति । यम् (३) । कामयेत । पशुमानिति पशु-मान् । स्यात् । इति । प्रतीचीम् । तस्य । इडाम् । उपेति । ह्वयेत । पशुमानिति पशु-मान् । एव । भवति । ब्रह्मवादिन इति ब्रह्म-वादिनः । वदन्ति । सः ।
१० तु । वै । इडाम् । उपेति । ह्वयेत । यः । इडाम् । उपहूयेत्युप-हूय । आत्मानम् । इडायाम् । उपह्वयेतेत्युप-ह्वयेत । इति । सा । नः । प्रिया । सुप्रतूर्तिरिति सु-प्रतूर्तिः । मघोनी । इति । आह । इडाम् । एव । उपहूयेत्युप-हूय । आत्मानम् । इडायाम् । उपेति । ह्वयते ।

'पशवो वै' इत्यादि । इडायाः प्रतीचीनत्वेन पशवः एव देवान् अवृणत इति वेदितव्यम् । पराचीनत्वेन असुरान् पशवः अजहुः अत्यजन् । "सिजभ्यस्त" (पा ३-४-१०९) इति जुस् ॥
१५ 'यम्' इत्यादि । गतम् ( तैसं १-७-१ ) ॥

'ब्रह्मवादिनः' इत्यादि ॥ ब्रह्म वेदः तद्वदितुं शीलं येषामिति "ब्रह्मणि वदः" ( पा ३-२-७८ वा २ ) इति णिनिः । संहितायां तोरन्त्यलोपश्छान्दसः । उक्तं च प्रातिशाख्ये— "तुनुपूर्व उदात्तयोर्थकारः" ( तैप्रा ५-१३ ) इति । यः इडाम् आत्मनि उपहूय आत्मानम् इडायाम् उपह्वयते स एवेडामुपह्वातुमर्हतीति ब्रह्मवादिन आहुः ॥

२० 'सा नः' इत्यादि ॥ सुप्रतूर्तित्वात् मघवत्त्वाच्च सा अस्माकं प्रिया इति आत्मानम् इडायाम् उप ह्वयते । 'व्यस्तम्' इत्यादि । विच्छेद इवैष यज्ञस्य क्रियते यत् इडा नाम ।

स्येवमादाविडाशब्दप्रयोगः सांमुख्यम् । उपहूतेडेति [13]पश्चादिडाशब्दप्रयोगो विमुखत्वम् । तत्र संमुखत्वेन मुदा सती सा देवान् उपावर्तत । "पशवो या इडा" ( तैसं २-६-८) इत्यन्यत्राऽऽम्नातत्वादिडारूपाः पशवः तत् तदा देवान् अवृणत वृतवन्तः प्राप्तवन्तः ॥ विमुखत्वेनेडायाः अपरितोषात् तद्रूपाः पशवः
२५ असुरान् अजहुः त्यक्तवन्तः [14] ॥

यमिति ॥ तत्र हेयपक्षं विधत्ते— 'यं कामयेतापशुः स्यादिति पराचीं तस्येडामुप ह्वयेतापशुरेव भवति' इति ॥

यमिति ॥ उपादेयपक्षं विधत्ते— 'यं कामयेत पशुमान्त्स्यादिति प्रतीचीं तस्येडामुप ह्वयेत पशुमानेव भवति' इति ॥

ब्रह्मवादिन इति ॥ 'सा नः प्रिया' इति मन्त्रभागं व्याख्यातुं प्रस्तौति— 'ब्रह्मवादिनो वदन्ति
३० स त्वा इडामुप ह्वयेत य इडामुपहूयाऽऽत्मानमिडायामुप ह्वयेतेति' इति ॥ वेदार्थविचारका विद्वांसः

१३. तं.ति-पदादि । १४. आ.ना.हा-संत्यक्तवन्तः ।

इडानुमन्त्रणम् ]

व्यस्तमिव वा एतद्यज्ञस्य यदिडा सामि प्राश्नन्ति (४) सामि मार्जयन्त एतत् प्रति वा असुराणां यज्ञो व्यच्छिद्यत ब्रह्मणा देवाः समदधुर्-

व्यस्तमिति वि–अस्तम् । इव । वै । एतत् । यज्ञस्य । यत् । इडा । सामि । प्राश्नन्तीति प्र–अश्नन्ति (४) । सामि । मार्जयन्ते । एतत् । प्रतीति । वै । असुराणाम् । यज्ञः । वीति । अच्छिद्यत । ब्रह्मणा । देवाः । समिति । अदधुः । ५

कथमित्याह—'सामि' इत्यादि । तत्र हविषो यदेकदेशं प्राश्नन्ति यजमानपञ्चमा ऋत्विजः, एकदेशं प्रस्तरे मार्जयन्ते, नाऽयं यज्ञो न दक्षिणा व्यय एवायं, तस्माद्विच्छिद्यते यज्ञ इति । "चादिलोपे विभाषा" (पा ८·१·६३) इति प्रथमा तिङ्विभक्तिर्न निहन्यते, गतिस्वरसमासावुक्तौ । 'व्यस्तम्' इति भावे निष्ठायां व्यत्ययेन गतेः प्रकृतिस्वरत्वम् । "उदात्तस्वरितयोर्यणः" (पा ८·२·४) इत्यकारः स्वर्यते ॥ १०

'एतत् प्रति' इति । अत एवैतस्मिन् प्रदेशे असुराणां यज्ञः व्यच्छिद्यत अतः परं लुप्त एवाभवत् । लक्षणादिना प्रतेः कर्मप्रवचनीयत्वम् (पा १·४·९०) । देवाः तु विच्छिन्नं यज्ञं ब्रह्मणि सम् अदधुः संहितमकुर्वन् ।

परस्परमित्याहुः । किमिति ? यः बुद्धिमान् मन्त्रेण 'इड एह्यदित एहि' इत्यादिना इडाम् उपहूय तस्याम् इडायाम् आत्मानम् उपह्वयते योजयति सः एव इडां यथातथम् उप ह्वयेत इति ॥ १५

सेति ॥ मन्त्रं व्याचष्टे—'सा नः प्रिया सुप्रतूर्तिर्मघोनीत्याहेडामेवोपहूयाऽऽत्मानमिडामुप ह्वयते' इति ॥ येयमिडाऽस्माभिः 'इड एहि' इत्यादिनोपहूता सा इयमिडा[15] नः अस्माकं प्रिया इत्यनेन वचनेन स्वात्मानम् इडायां योजितवान् भवति ॥

व्यस्तमिति ॥ [16]मार्जनार्थं 'मनो ज्योतिः' इत्यादिकामृचं व्याख्यातुं प्रस्तौति—'व्यस्तमिव वा एतद्यज्ञस्य यदिडा सामि प्राश्नन्ति सामि मार्जयन्त एतत्प्रति वा असुराणां यज्ञो व्यच्छिद्यत ब्रह्मणा देवाः समदधुः' इति ॥ इडेति यदेतेन यज्ञस्य अङ्गं व्यस्तं विच्छिन्नमिव भवति । तत्कथम् इत्युच्यते— सामि पुरोडाशस्य लेशमिडाभागरूपमृत्विजः प्राश्नन्ति; सामि उदकलेशं मार्जयन्ते शिरसि सिञ्चन्ति । तदानीं प्रधानयागाः पूर्वमेव हुता अनूयाजादियागा इत ऊर्ध्वं भविष्यन्ति तन्मध्ये स्त्रैवदिडाभक्षणं मार्जनं च क्रियते तयोरयागरूपत्वाद्यागविच्छेदकत्वम् । तथा सत्यसुरा भविष्यताननूयाजादीन् विस्मृतवन्तः । अतः असुराणां यज्ञः एतत् प्रति भक्षणमार्जनद्वयं प्रत्येतदीये काले विच्छिन्नोऽभूत् । देवाः तु २५ अप्रमत्ताः सन्तः ब्रह्मणा परिवृढेन केनचित् पुरुषेण सम् अदधुः तयोर्विच्छिन्नयोः पूर्वोत्तरयोर्यज्ञभागयोः संधानं कृतवन्तः ॥

६. तं.ति.त्रि–न्ये एकदेशम् ।

१५. आ.ना.हा–'इयमिडा' इत्यस्यानन्तरं 'त्वम्' । १६. तं.ति–याजनार्थम् ।

बृहस्पतिस्तनुतामिमं न इत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञ॰ सं दधाति विच्छिन्नं यज्ञ॰ समिमं दधात्वित्याह संतत्यै विश्वे देवा इह मादयन्तामित्याह संतत्यैव यज्ञं देवेभ्योऽनु दिशति यां वै (५) यज्ञे दक्षिणां ददाति तामस्य पशवोऽनु सं क्रामन्ति

५ बृहस्पतिः । तनुताम् । इमम् । नः । इति । आह । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । यज्ञम् । समिति । दधाति । विच्छिन्नमिति वि-छिन्नम् । यज्ञम् । समिति । इमम् । दधातु । इति । आह । संतत्या इति सम्-तत्यै । विश्वे । देवाः । इह । मादयन्ताम् । इति । आह । संतत्येति सम्-तत्य । एव । यज्ञम् । देवेभ्यः । अन्विति । दिशति । याम् । वै (५) । यज्ञे । दक्षिणाम् । ददाति । ताम् । अस्य । पशवः । अनु । समिति । क्रामन्ति ।

१० तस्मात् "बृहस्पतिस्तनुतामिमं नः" (तैसं १.६.३) इति मार्जनमन्त्रे वचनं ब्रह्मणि संधानप्रतिपादनार्थं, 'विच्छिन्नम्' इति वचनं संतत्यै । [17]ब्रह्मणा [17]समदधुः इत्युक्ते ब्रह्मप्रतिपादनस्याकाङ्क्षितत्वात् तृतीयः पादः प्रथमं व्याख्यातः । ततो द्वितीयः — 'विश्वे' इति । [18]विच्छिन्नं [18]यज्ञं [18]संततम् [18]एव सन्धाय [18]देवेभ्यः [18]अनु [18]दिशति । इह संहिते यज्ञे देवा माद्यन्तु मोपेक्षां कृषतेति बोधयति ॥

१५ 'यां वै' इत्यादि ॥ अत्र "अश्न पिन्वस्व" (तैसं १.६.३) इति बर्हिषदं पुरोडाशमनुमन्त्रयते, स च ऋत्विग्भ्यो दक्षिणैव दीयते । तामधिकृत्येदमुच्यते—[19]दक्षिणां

बृहस्पतिरिति ॥ तस्या ऋचस्तृतीयपादं व्याचष्टे—'बृहस्पतिस्तनुतामिमं न इत्याह ब्रह्म वै देवानां बृहस्पतिर्ब्रह्मणैव यज्ञ॰ सं दधाति' इति ॥ देवगुरुत्वात् बृहस्पतेः परिवृढत्वम् ॥

विच्छिन्नमिति ॥ संधानप्रतिपादकं [17]तृतीयं पादं व्याख्याय संधानप्रतिपादकं [18]द्वितीयं पादं २० व्याचष्टे—'विच्छिन्नं यज्ञ॰ समिमं दधात्वित्याह संतत्यै' इति ॥ अविच्छेदायेत्यर्थः ॥

विश्व इति ॥ तस्य [19]संततस्य यज्ञस्य देवसमर्पणप्रतिपादकं चतुर्थपादं व्याचष्टे—'विश्वे देवा इह मादयन्तामित्याह संतत्यैव यज्ञं देवेभ्योऽनु दिशति' इति ॥

यामिति ॥ 'अश्न पिन्वस्व' इत्यादिकं पुरोडाशाभिमन्त्रणमन्त्रं व्याख्यातुं प्रस्तौति—'यां वै यज्ञे दक्षिणां ददाति तामस्य पशवोऽनु सं क्रामन्ति स एष ईजानोऽपशुर्भावुको यजमानेन खलु वै २५ तत्कार्यमित्याहुर्यथा देवत्रा दत्तं कुर्वीताऽऽत्मन् पशून् रमयेतेति' इति ॥ यजमानेनर्त्विग्भ्यो दीयमानां गवान्वाहार्यादिरूपां दक्षिणां तदीयाः पशवः सर्वेऽप्यनुगच्छन्ति, तदा यज्ञानुष्ठाता च पशुरहितो भवति । अतः [20]स्वेन दत्तं दक्षिणाद्रव्यं [20]यथा [20]देवत्रा देवेषु ऋत्विक्ष्ववस्थितं भवति पशवश्च यथा स्वस्मिन्नेव रमन्ते, तथा [20]यजमानेन कर्तव्यमिति बुद्धिमन्तः [20]आहुः ॥

१७. आ.तं.त्रि४-तृतीय° । १८. आ.त्रि४.ना.पा.हा-द्वितीय° । १९. उ-संतत° ।
३० २०. क.तं.त्रि-तेन ।

स एष ईजानोऽपशुर्भावुको यजमानेन खलु वै तत्कार्यमित्याहुर्यथा देवत्रा दत्तं कुर्वीताऽऽत्मन् पशून् रमयेतेति ब्रघ्न पिन्वस्वेत्याह यज्ञो वै ब्रघ्नो यज्ञमेव तन्महयत्यथो देवत्रैव दत्तं कुरुत आत्मन् पशून् रमयते ददतो मे (६) मा क्षायीत्याहाक्षितिमेवोपैति कुर्वतो मे मोप दसदित्याह भूमानमेवोपैति ॥ १ ॥

[विद्वान् ध्यायेद्भवति यं प्राश्नन्ति यां वै म एकान्नत्रिँशतिश्च] ॥ १ ॥

सः। एषः। ईजानः। अपशुः। भावुकः। यजमानेन। खलु। वै। तत्। कार्यम्। इति। आहुः। यथा। देवत्रेति देव–त्रा। दत्तम्। कुर्वीत। आत्मन्। पशून्। रमयेत। इति। ब्रघ्न। पिन्वस्व। इति। आह। यज्ञः। वै। ब्रघ्नः। यज्ञम्। एव। तत्। महयति। अथो इति। देवत्रेति देव–त्रा। एव। दत्तम्। कुरुते। आत्मन्। पशून्। रमयते। ददतः। मे (६)। मा। क्षायि। इति। आह। अक्षितिम्। एव। उपेति। एति। कुर्वतः। मे। मा। उपेति। दसत्। इति। आह। भूमानम्। एव। उपेति। एति ॥ १ ॥

[७]पशवः [७]अनु [७]सं [७]क्रामन्ति दक्षिणया सह गच्छन्ति। [७]सः [७]एषः यजमानः [७]ईजानः दक्षिणादानान्तं सर्वं यज्ञं कृतवान् [७]अपशुः [७]भावुकः भविता। "लषपतपद" (पा ३·२·१५४) इत्युकञ्प्रत्ययः। तस्मात् [७]यजमानेन तादृशं किंचित् कर्तव्यं, येन [७]देवत्रा देवेषु ऋत्विक्षु [७]दत्तं पुरोडाशमेव [७]कुर्वीत कर्तुं समर्थः स्यात्, आत्मनि [७]एव [७]पशून् [७]रमयते। "देवमनुष्य" (पा ५·४·५६) इति त्राप्रत्ययः। 'ब्रघ्न पिन्वस्व' इत्यादि। [७]महयति महान्तं करोति; महितं वा करोति। गतमन्यत् (तैसं १·६·३) ॥

इति सप्तमे प्रथमोऽनुवाकः ॥

ब्रघ्नेति ॥ मन्त्रस्य प्रथमभागं व्याचष्टे—'ब्रघ्न पिन्वस्वेत्याह यज्ञो वै ब्रघ्नो यज्ञमेव तन्महयत्यथो देवत्रैव दत्तं कुरुत आत्मन् पशून् रमयते' इति। हे यज्ञ, प्रीणीहीत्यनेन यज्ञस्य पूजारूपेण प्रोत्साहनेन यथोक्तं प्रयोजनद्वयं संपद्यते ॥

ददत इति ॥ द्वितीयं भागं व्याचष्टे—'ददतो मे मा क्षायीत्याहाक्षितिमेवोपैति' इति। [२१]दानेन प्रयुक्तो [२२]द्रव्योपक्षयो मा क्षायीति प्रार्थनेन निवारितो भवति ॥

कुर्वत इति ॥ 'कुर्वतो मे मोप दसदित्याह भूमानमेवोपैति' इति। उपक्षयनिवारणस्य पूर्वमेव प्रार्थितत्वान्मोप दसदित्यनेनाभिवृद्धिलक्षणं बाहुल्यमेव प्रार्थ्यते भूमानमेवोपैतीति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे सप्तमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

७. ति.त्रि.मै–इत्युकन्।

२१. आ.ना.हा–दान॰। २२. आ.ना.हा–द्रव्यक्षयो।

सꣳश्रंवा ह सौवँचनसस्तुमिंञ्जमौपोदितिमुवाच यत् सुत्रिणाꣳ होताऽभूः कामिडामुपाह्वथा इति तामुपाह्व इति होवाच या प्राणेन देवान् दाधार व्यानेन मनुष्यानपानेन पितृनिति छिनत्ति सा न छिनत्ती३ इति छिनत्तीति होवाच

सꣳश्रवा इति सम्–श्रवाः । ह । सौवर्चनसः । तुमिञ्जम् । औपोदितिमित्यौप–उदितिम् । ५ उवाच । यत् । सत्रिणाम् । होता । अभूः । काम् । इडाम् । उपेति । अह्वयाः । इति । ताम् । उपेति । अह्वे । इति । ह । उवाच । या । प्राणेनेति प्र–अनेन । देवान् । दाधार । व्यानेनेति वि–अनेन । मनुष्यान् । अपानेनेत्यप–अनेन । पितृन् । इति । छिनत्ति । सा । न । छिनत्ती३ । इति । छिनत्ति । इति । ह । उवाच ।

'संश्रवाः' इत्यादि प्रासङ्गिकं हौत्रम् । सुवर्चनसोऽपत्यं संश्रवाः नाम । उपोदितस्यापत्यं २० तुमिञ्जं नाम उवाच । 'यत्' इत्यादि । यत् यदा । उपाह्वयाः "निसमुपविभ्यो ह्वः" (पा १.३.३०) इत्यात्मनेपदम् । "लिपिसिचिह्वश्च" (पा ३.१.५३) इत्यङ् । एवं संश्रवसा पृष्टे 'ताम्' इत्युत्तरम् उवाच तुमिञ्जः । 'या' इत्यादि । या प्राणेन उत्तमवृत्त्या दक्षिणात्वेन देवान् धारयति, व्यानेन मध्यमवृत्त्या मनुष्योपजीव्यत्वेन मनुष्यान् धारयति, अपानेन अधमवृत्त्या मरणेन पितृन् धारयति, तादृशीमहम् उपाह्वे, सन्ध्या [सेयं] अन्या वास्त्विति ॥

२५ अथ संश्रवाः–'छिनत्ति' इत्यादिकम् । प्रतिग्रहादिषु प्रजां अनर्थेन योजयति उत नेति । प्रश्नान्ते प्लुतः (पा ८.२.१०५) । छान्दसं तिङ उदात्तत्वम् । विभ्रजनादित्वात्तुगभावः

[1]इडाद्यनुमन्त्रणमन्त्राः प्रथमे व्याख्याताः । तामिडां द्वितीये द्वयोर्मुन्योः प्रश्नोत्तराभ्यां प्रशंसति ।

संश्रवा इति ॥ तत्र प्रश्नमवतारयति— 'सꣳश्रवा ह सौवर्चनसस्तुमिञ्जमौपोदितिमुवाच' इति ॥ संश्रवाः [2]इत्यृषेर्नामधेयम् । स च सुवर्चनसः पुत्रः । तुमिञ्ज इत्यृष्यन्तरस्य नामधेयम् । स २० चौपोदितस्य पुत्रः ।

यदिति ॥ संश्रवसः प्रश्नं दर्शयति—'यत्सत्रिणाꣳ होताऽभूः कामिडामुपाह्वथा इति' इति ॥ यत् यदा, तदेत्यध्याहारः । कां किंगुणकाम् ॥

तामिति ॥ तुमिञ्जस्योत्तरं दर्शयति—'तामुपाह्व इति होवाच या प्राणेन देवान् दाधार व्यानेन मनुष्यानपानेन पितृनिति' इति ॥ प्राणादिवृत्तिभिरिडाया देवादिधारणमुत्तरत्र स्पष्टीकरिष्यते ॥ तां २५ देवादिधारणगुणकामिडामुपहूतवानस्मि ॥

छिनत्तीति ॥ पुनः प्रश्नं दर्शयति—'छिनत्ति सा न छिनत्ती३ इति' इति ॥ त्वयोपहूता सा इयम् इडा गोरूपा सती दक्षिणात्वेन प्रतिग्रहीतृन् किं छिनत्ति प्रतिग्रहदोषेण विनाशयति, अथवा न छिनत्ति [3]इति विचारार्थः प्लुतः ॥

छिनत्तीति ॥ उत्तरं दर्शयति—'छिनत्तीति होवाच' इति ॥

३० १. तं.ति–इडार्थमन्त्राः; म४–इडामन्त्राः; त्रि४–इडाद्यष्ट मन्त्राः । २. म४–इत्यृषिनाम । ३. इ.उ.क.तं.ति.पा.म४.डा–'इति' नास्ति ।

